॥ श्रीवेङ्कटेश क्षमात्रयस्त्रिंशच्छलोकी ॥

श्रीमद्वेङ्कटशैलवर्यशिखरे रत्नप्रदीपो महां
    त्रैलोक्यान्धतमिस्र चूषणकृते यो जाज्वलीति स्फुटम् ।
कल्याणव्रजरोध्यनादिसु दृढाघध्वान्त विध्वंसनं
    कुर्वन्मङ्गलमातनोतु नितरामात्मानुरूपं स नः ॥ १॥

महामोहमय्यां भवाब्ध्यन्तरीपे
    महाधन्वमह्यां मदीयं चरन्तम् ।
मृगं स्वान्तनामानमार्तें परीतं
    महांहोमृगेन्द्रै रमेशाशु रक्ष ॥ २॥

प्रभो वेङ्कटेश प्रभा भूयमी ते
    तमः सञ्छिन्नर्त्ति प्रदेशे ह्यशेषे ।
अहो मे हृदद्रेर्गुहागूढमन्धन्
    तमो नैति नाशं किमेतन्निदानम् ॥ ३॥

अथावैमि वैतन्निदानं हृदाहं
    सहा त्वत्सपर्याविपर्यासहेतौ ।
कुमार्गे महामोहमार्गे सनिष्ठः
    सुनिष्ठातृभावं प्रभो यद्वहामि ॥ ४॥

जनं तावकीनं किमेनं सुदीनं
    वृथाजातमेवं वृथोपेक्षसे त्वम् ।
रमेशैवमेवं वृथोपेक्षसे चेत्
    क्षमायाः प्रकाशो मदन्येन केन ॥ ५॥

मदन्यः क्व विप्रेषु वैश्येषु-
    राजस्वथो शूद्रजातिष्वथो सङ्करेषु ।
निकृष्टः क्व दृष्टः क्व वा ते क्षमायाः
    प्रकाशो रमेष ध्रुवं स्यात्प्रहीणः ॥ ६॥

रमा सा क्व याता क्षमोद्बोधिनी ते
    ममातुल्यमाता तवोरस्थलस्था ।
ममाभाग्यजातात्तवाभोग्यभूता
    रमापि प्रभो किं प्रमोदावहा ते ॥ ७॥

क्षमा यातु गुप्ता रमाया विधेयं

क्व वात्सल्यभूमा यतो दोषिवृन्दम् ।
महानन्दमेति ह्यहो मत्प्रवर्जे
प्रवृत्तिः किमस्य प्रभो वेङ्कटेश ॥ ८॥

दया सा क्व याता यया दुःखिबन्धो
परेषां विषादो वृषाद्रीश नाश्यः ।
ममामन्ददुःखप्रणाशे प्रकाशं
न सा यातुमर्हा किमस्याव्रतं किम् ॥ ९॥

परित्यज्य भोगं परव्योमनिस्वं
महानन्दधामन्यपीहाहि शैले ।
यदर्थे समायास्तदर्थे विचिन्त्य
प्रभो वेङ्कटेश द्रुतं मां सुरक्ष ॥ १०॥

पुरा कस्य चिद्रो महापापदाहात्
अभूत्ते भिदा श्रीगिरे वेङ्कटेति ।
ममा तुल्यपाप प्रदाहात्तवाद्य
अभिधा स्यान्नवीना रमेशाखिलेड्या ॥ ११॥

ममामन्द पापप्रवृतेर्निवृत्तिं
यदीक्षेत भो भो भवान् रक्षितुं माम् ।
तदामन्दकल्लोलजालाकुलेब्धौ
भवान् स्नातुमिच्छेद्विरामं निरीक्ष्य ॥ १२॥

क्व तञ्चक्रमास्ते निकृत्तारिचक्रं
भवद्भक्तचक्रे शुभं येन चक्रे ।
हरे चक्रमेतत्तवैतज्जनस्य
प्रभूताघचक्रं न किम् छेत्तुमीष्टे ॥ १३॥

नियुज्य स्वचक्रं ममाघौघचक्रं
न चेच्छेत्स्यसि त्वं नदा कस्य हानिः
तवैवेति सत्यं यदेतज्जगत्या
वशं कोऽपि यायादिनीक्षा कृतेयम् ॥ १४॥

निकृष्टोत्तमं मा विक्रुद्वं विवायानु
कम्पां विदध्या यदि त्वं रमेश ।
तदैतत्समीक्ष्येह वश्या भवेयु
स्तवानेकलोका निकृष्टाश्च शिष्टा ॥ १५॥

ममोत्तुङ्गचेतस्तुरंगोधिरोहो
    चितस्तेधिरूढो मनोजाधिराजा ।
निरस्याशु तं भोः सभारोह तं किं
    वृथोपेक्षसे त्वं त्वं त्वदीयं तुरङ्गम् ॥ १६॥

मदीये त्वदीयालयेनादिसिद्धे
    हृदीश त्वदन्ये परीवारयुक्ताः ।
कदाचित्समागत्य तिष्ठन्ति तान्नो
    निरस्येर्यदि स्यात्तदीयं गृहं तत् ॥ १७॥

महादुष्टकाम प्रभृत्यन्त्यवर्णो
    षितेस्वान्तसद्मन्यशुद्धे मदीये ।
निरस्याशु तं ते पदाम्भोजयुग्म
    प्रवेशे न शुद्धं गृहं तद्विधेहि ॥ १८॥

भवद्दिव्यदेह प्रभादीपजाल
    प्रभाभिर्विधुन्वन् प्रकृष्टं तमिस्रम् ।
त्वदीयैः सह त्वं कुटुम्बै रमेश
    वसास्मिन् गृहे मे सुखी स्वान्तनाम्नि ॥ १९॥

अविद्यार्कवृक्षं हृदावालरूढ
    ममानादिमूलं विभिन्दन् विमूलम् ।
समावाप्य बीजं त्वदीयांघ्रिभक्ति
    प्रकृष्टाम्रबीजम् रमेशेह रक्ष ॥ २०॥

त्वदाज्ञावशेनादधानोऽपि किञ्चित्
    स्वतन्त्रोऽहमेवं करोमी त्यहंयुः ।
सुधा भावमेनं वृथा भावय त्वं
    त्वदाधीन्यभावं सदा भावयेश ॥ २१॥

बहिर्भावयामि स्ववाचाखिलानि
    त्वदीयान्यमूनीति भो वेङ्कटेश ।
हृदि त्वध्यवस्ये ममैवोपभोग्य
    अन्यमूनीति नित्यं जहीदं रमेश ॥ २२॥

परस्वस्पृहा मे सदा वोभवीति
    प्रथीयस्यमुष्याशुभेनैमि मोदम् ।

परस्यासु नाशे तदीयं मदीयं
भवेदिव्यहोमे दुराशां जहीश ॥ २३॥

परालाभलब्धप्रणाशाववेक्ष्य
प्रपद्ये महालाभयुग्मप्रमोदम् ।
धनाप्तौ परस्य स्वीकीयस्य नाशं
भजामीत्यसूयां जहि श्रीनिवास ॥ २४॥

परस्वापहारे मम स्वापहारः
परानर्थदृष्टौ ममानर्थलाभः ।
परानन्दलाभे ममानन्दलाभो
महानित्यमूं मे मनीषां विधत्स्व ॥ २५॥

महाकण्टकारिं महासङ्कटं
भोस्त्वंघ्रिप्रफुल्लारविन्दार्पणेन ।
इमं देशमाधा मुदं संदधानं
भवद्भक्तसंघं महान्तं रमेश ॥ २६॥

अकल्याणमेतं सकल्याणमाधाः
किमत्रादिमूलं न जाने रमेश ।
अथावैमि हेतुं तवाध्याजभूयः
कृपापारिसिन्धो प्रीराहमेव ॥ २७॥

सकृते पदाब्जप्रचारेण नालं
विवा यान्यदेशे निवासे निकामम् ।
इहैवास त्वं ममत्वं वह त्वं
किमर्थे तवार्थे त्वदन्यः प्रपश्ये ॥ २८॥

अथैकोऽपि को वा त्वदर्थे त्वदन्यः
समालक्षितुं वा समारक्षितुं वा ।
समर्थोऽस्ति लक्ष्मीपते वेङ्कटाद्रेः
पते तत्र किम् वाधिकं नेह किं वा ॥ २९॥

यद्रप्यस्ति तत्र त्वदावासभूम्ना
तदत्रापि च स्यत्त्वदीयागमश्चेत् ।
ममामन्द पापप्रवृत्तिं निरीक्ष्य
अगमश्चेन्न ते स्यादत्ता कस्य हानिः ॥ ३०॥

अथाल्पस्य हेतोर्विहातुं बहु स्यात्
तवेदं न युक्तं प्रभो वेङ्कटेश ।
अथानल्प पापप्रवृत्तिर्मदीया
निवर्त्या न किं तेऽखिलाघौघनाशिन् ॥ ३१॥

मृगपतिपदं श्वारूढश्चेन्निबद्धसटाजटीम-
प्यनलमिभराट्कुंभाभेदिप्रभूतरवे यया ।
प्रथमगुरुभिर्गीतं नेच्ये विडम्बयता मया
शुनयसदृशं हास्यं प्राप्तं तथा नियतं त्विदम् ॥ ३२॥

इत्थं श्री वेङ्कटाद्रिप्रभुपदयुगली
भक्तवर्यस्य गङ्गाविष्णोर्याञ्चाविशेषाद्
व्यरचि कृतिरियं वेङ्कटेशक्षमायः ।
श्रीशैलानन्तवर्यान्वयसमुदयिना
वेङ्कटार्येण भक्त्या निक्षिप्ता तत्पदाब्जे
मुदमतितनुतां तन्वतां स्वान्तदेशे ॥ ३३॥

॥ इति श्रीमदनन्ताचार्यविरचितं श्री वेङ्कटेश
क्षमात्रयस्त्रिंशच्छलोकीस्तोत्रम् सम्पूर्णम् ॥